यलक्षणे व्यापारे शुनाशुने च ध्याने वर्तमानैर्ग्रंथरचना क्रियते । तत्र लोकोत्तरैः
शुनध्यानावस्थितैर्ग्रंथरचना विधीयते ॥ लोकेत्वशुनध्यानाश्रितैर्ग्रंथग्रथन
लौकिकग्रथस्य कर्मबंधहेतुत्वात् कर्तुरशुनध्यायित्वमवसेय ॥ इहतु सूत्रकृतस्य
समयेन शुनाध्यवसायेनच प्रकृतं ॥ यस्माद्गणधरैः शुनध्यानावस्थितैरिदमगं
तेषाच ग्रथरचनाप्रति शुनध्यायिना कर्मद्वारेण योऽवस्थाविशेषस्तद्दर्शयितुकामो
क्तिरुदाह ॥ (विइअणुजावे बधण, निकायणनिहत्त दीहहस्सेसु ॥ सकम
उदये वेदेउवसलेयं)॥१७॥(विइइत्यादि) । तत्र कर्मस्थितिं प्रति
निर्गणधरैः सूत्रमिद कृतमिति ॥ तथाऽनुजावो विपाकस्तदपेक्षया मदानुजावैस्तथा
धमगीकृत्य ज्ञानावरणीयादिप्रकृतीर्मदानुजावा बध्नद्भिस्तथाऽनिकाचयद्भिरेव
वस्थामकुर्वद्भिस्तथा दीर्घस्थितिका प्रकृतीर्ह्स्वीयर्स नय
सु सक्रामयद्भिस्तथोदयवता कर्मणामुदीरणा विदधानैरप्रमत्तगुणस्थैस्तु
यूष्यनुदीरद्भिस्तथा मनुष्यगति पचेद्रिय जात्यौदारिक शरीर तद
मुदये वर्तमानैस्तथावेदमगीकृत्य पुवेदेसति तथोवसमेति सूचनात्सूत्रमिति
मिकाजावे वर्तमानैर्गणधारिनिरिद सूत्ररुतांग ग्रथितमिति १७साप्रतं
द्वारेण करणप्रकारमनिधातुकामश्राह ॥ (सोऊण जिणवरमतं, गणहारी काउ
उं वसम ॥ अज्ञवसाणेण कय, सूत्तमिण तेणसूयगड ) ॥१८॥ (सोऊणेत्यादि)
निशम्य जिनवराणां तीर्थकराणा मतमनिप्रायं मातृकाडिपद गणधरैर्गौतमादिनि कृत्वा
तत्रग्रथरचने क्षयोपशम तत्प्रतिबधकर्मक्षयोपशमाद्दत्तावधानैरितिनाव ॥
येन वसता कृतमिद सूत्र तेनसूत्रकृतमिति॥१८॥इदानीं कस्मिन् योगे वर्तमानैस्तीर्थकृद्भि
र्नापितं कुत्रवा गणधरैर्दृब्धमित्येतदाह ॥(वइजोगेणपजावियं, मणेगजोगधराणसाहूण॥
तो वय जोगेणकय, जीवस्स सजावियगुणेण)॥ १९ ॥ (वइजोगेणेत्यादि) । तत्र तीर्थ
कृद्भि क्षायिकज्ञानवर्तिनिर्वाग्योगेनार्थ प्रकर्षेण जापित प्रजापितो गणधराणां ॥ तेच
नप्राकृतपुरुषकल्पा किंत्वनेकयोगधरा ॥ तत्र योग क्षीराश्रवादिलब्धिकलापसबधस्त
धारयतीत्यनेकयोगधरास्तेषां प्रजापितमिति सूत्रकृतांगाऽपेक्षया नपुसकता ॥ साधवश्चा
त्र गणधरा एव गृह्यते तदुद्देशेनैव जगवतामर्थप्रजापणादिति ॥ ततोर्थं निशम्य गणधरै
रपि वाग्योगेनैव कृतं तच्च जीवस्य स्वाजाविकेन गुणेनेति ॥ स्वस्मिन्जावे जव स्वाजावि
क प्राकृतइत्यर्थं ॥ प्राकृतजाषयेत्युक्त जवति॥ नपुन सस्कृतया जदलिट्शप् प्रकृतिप्रत्य
यादिविकारविकल्पनानिष्पन्नयेति ॥१९॥ पुनरन्यथा सूत्रकृतनिरुक्तमाह ॥ ( अरकरगुण
मतिसघा, यणाएकम्मपरिसाडनाएय ॥ मङजयजोगेण कय, सुत्तमिण तेण सूत्तगम)
॥ २० ॥ (अरकरेत्यादि) । अक्षराणि अकारादीनि तेषा गुणोऽनतगमपर्यायत्वमुच्चारण

ततस्तथैव यत्न विधत्त यूयमिति शिष्याणामुपदेशो दीयते ॥ सप्तमे त्विदमभिहितं ॥ त द्यथा ॥ नि शीला गृहस्था कुशीलास्त्वन्यतीर्थिका पार्श्वस्थादयो वा ते परित्यक्ता येन सा धुना स परित्यक्तनि शीलकुशील इति ॥ तथा सुशीला उद्युक्तविहारिण संविग्ना सवे गमग्नास्तत्सेवाशील शीलवान् भवतीति । अष्टमे त्वेतत्प्रतिपाद्यते । तद्यथा । ज्ञात्वा वीर्य द्वय पण्डितवीर्ये प्रयत्नो विधीयत इति ॥ नवमे चार्थाधिकारस्त्वय ॥ तद्यथा ॥ यथाऽवस्थि तोधर्म कथ्यते ॥ दशमेतु समाधि प्रतिपाद्यते ॥ एकादशेतु सम्यग्दर्शनज्ञानचारित्रात्म को मोक्षमार्ग कथ्यते ॥ द्वादशे त्वयमर्थाधिकार ॥ तद्यथा । समवसृता अवतीर्णा व्य वस्थिताश्चतुर्पु मतेषु क्रियाऽक्रियाऽज्ञानवेनयिकाख्येष्वभिप्रायेषु त्रिषष्ट्युत्तरशतत्रय सख्या पाषण्डिन स्वीय स्वीयमर्थं प्रसाधयत समुदितास्तदुपन्यस्तसाधनदोपोद्भा वनतो निराक्रियते ॥ त्रयोदशे त्विदमभिहित ॥ तद्यथा ॥ सर्ववादिषु कपिलकणा दाक्षपादशौद्धोदनिजैमिनिप्रभृतिमतानुसारिषु कुमार्गप्रणेतृत्व साध्यते ॥ चतुर्दशेतु ग्रंथाख्येऽध्ययनेऽयमर्थाधिकार ॥ तद्यथा । शिष्याणा गुणदोषकथनं तथा शिष्यगुणसंपदु पेतेन च विनेयेन नित्य गुणानुरूपगुरुकुलवासो निषेव्य इति ॥ पंचदशे त्वादानीयाख्ये ऽध्ययनेऽर्थाधिकारोऽय ॥ तद्यथा ॥ आदीयते गृह्यते उपादीयते इत्यादानीयानि पदान्य र्था वा ते च प्रागुपन्यस्तपदैरर्थैश्च प्रायशोऽत्र सकलिता ॥तथा आयत चरित्र सम्यक्चरित्र मोक्षमार्गप्रसाधक तच्चात्र व्यावर्ण्यत इति ॥ षोडशेतु गाथाख्येऽष्टग्रंथेऽध्ययनार्थोय व्यावर्ण्यते। तद्यथा ॥ पंचदशभिरध्ययनैर्योर्थोऽभिहित सोत्र पण्डितवचनेन सक्षिप्ताभिधा नेन प्रतिपाद्यत इति ॥ 'गाहा सोलसगाण पिंडत्थोवन्निओ समासेण ॥ इत्तो इक्किक्क पुण अज्झयण कित्तयिस्सामि' ॥१॥ तत्रायमध्ययन समयाख्य तस्य चोपक्रमादीनि चत्वार्य नुयोगद्वाराणि भवति ॥ तत्रोपक्रमणमुपक्रम्यते वाऽनेन शास्त्र न्यासदेश निक्षेपावसरमा नीयत इत्युपक्रम । सच लौकिको नामस्थापनाद् द्रव्यक्षेत्रकालभावभेदेन पड्रूप आवश्यका दिष्वेवप्रपंचित ॥शास्त्रीयोप्यानुपूर्वीनामप्रमाणवक्तव्यतार्थाधिकारसमवताररूप पोढैव । तत्रानुपूर्व्यादीन्यनुयोगद्वारानुसारेण ज्ञेयानि तावद्यावत्समवतारसूत्रैस्तदध्ययनमानु पूर्व्यादिषु यत्र यत्र समवतरति तत्र तत्र समवतारयितव्य ॥ तत्र दशविधायामानुपूर्व्यांग णनानुपूर्व्यां समवतरति सापि त्रिधा। पूर्वानुपूर्वी पश्चानुपूर्वी अनानुपूर्वी चेति॥तत्रेदमध्य यन पूर्वानुपूर्व्या प्रथम पश्चानुपूर्व्या षोडशम्। अनानुपूर्व्या तु चिंत्यमानमस्यामेवैकादिका यामेकोत्तरिकायां षोडश गच्छताया श्रेण्यामन्योन्याभ्यासद्विरूपोनसंख्याभेद भवति ॥ अना नुपूर्व्यांतु षोडशभेदसंख्यापरिज्ञानोपायोय । तद्यथा । 'एकाद्या गच्छपर्यंता परस्परसमाह ता ॥राशयस्तद्धि विज्ञेय विकल्पगणिते फल'॥१॥ प्रस्तारानयनोपायस्त्वय॥पुव्वाणुपुव्विहेट्ठा

एव चतुर्थपञ्चमयो र्द्वौ द्वौ तथैकादशस्वेकसरकेष्वेकादशेवेति । प्रथमश्रुतस्कन्धे तथा यश्रुतस्कन्धे सप्ताध्ययनानि तेषा सप्तैवोद्देशनकाला एवमेते सर्व...
रागाद्द्विगुणमग षट्त्रिंशत्पदसहस्रपरिमाणमित्यर्थ ॥२२॥ सांप्रत ...
प्रथमश्रुतस्कधस्य नामनिष्पन्ननिक्षेपानिधित्सयाऽह । "निक्खेवोगाहाए,चउव्विहो सोलससु॥निक्खेवोयसुयमिय,खधेयचउव्विहो होइ"॥२३॥ (निक्खेवो इत्यादि) इहाद्यश्रुतस्कंधस्य गाथाषोडशक इति नाम। गाथाख्य षोडशमध्ययन यस्मिन् श्रुतस्कंधे सतथेति । तत्र गाथाया नामस्थापनाद्रव्यनावश्चतुर्विधो निक्षेप ॥ नामस्थापनेप्रसिद्धे ॥ द्रव्यगाथा द्विधा ॥ आगमतो नो आगमतश्च ॥ तत्र आगमतो ज्ञाता तत्र चानुपयुक्तोऽनुपयोगो द्रव्यमिति कृत्वा । नोआगमतस्तु त्रिधा । ज्ञशरीरद्रव्यगाथा नव्यशरीरद्रव्यगाथा ताभ्यां विनिर्मुक्ता च ॥ 'ससछतरूविसामणसेहयाताए गछणह जलया ॥गाहाएपञ्चद्धेतउग्गे ति इक्ककलो ' इत्यादिलक्षणलक्षिता पत्रपुस्तकादिन्यस्तेति ॥ नावगाथापि द्विविधा ॥ आगमत आगमनेदात्॥ तत्रा ऽऽगमतो गाथापदार्थज्ञस्तत्र चोपयुक्त ।नोआगमतस्त्विद मेव गाथाख्यमध्ययन ॥ आगमैकदेशत्वादस्य षोडशकस्यापि नामस्थापनाद् द्रव्यक्षेत्र कालनावनेदात् षोढा निक्षेप ॥ तत्र नामस्थापने क्षुण्णे । द्रव्यषोडशक ज्ञशरीरनव्य शरीरविनिर्मुक्त । सचित्तादीनि षोडश द्रव्याणि । क्षेत्रषोडशक षोडशाकाशप्रदेशा ॥ कालषोडशक षोडश समया एतत्कालावस्थापि वा द्रव्यमिति ॥ नावषोडशकमिदमेवाध्ययनषोडशक क्षायोपशमिकनाववृत्तित्वादिति ॥ श्रुतस्कधयो प्रत्येक चतुर्विधो निक्षेप ॥ सचान्यत्र निक्षेपेण प्रतिपादित इति नेह प्रतन्यते ॥२३॥ साप्रतमध्ययनानाप्रत्येकमर्थाधिकारदिदर्शयिषयाऽह ॥ "ससमय परसमयपरू, वणायणाऊण बज्झणा चेव ॥ सबुद्धस्सु वसग्गा थीदोसविवज्जणाचेव ॥ २४ ॥ उवसग्गजीरुणोथी वस्साणरएसु होज्ज उववाउ ॥ एवमहप्पावीरो जयमास तहा जएज्जाह ॥ २५ ॥ परिचत्तनिशीलकुशी,लसुशील स विग्गशीलवचेउ ॥ णाऊण वीरियदुग पहिय नीरियपहुज्ज पवयइ ॥ २६ ॥ धम्मोसमा हिमग्गो समोसढा चउसुसव्ववादीसु ॥ सीसगुण दोसकहणा गथम्मि सदा गुरुनिवासो ॥२७॥ आदाणिय सकलिया आदाणीयम्मि आदयचरित्त ॥ अप्पग्गथे पम्हिय वयणेणहा गहाइ अहिगारो" ॥२८॥ (ससमय इत्यादि गाथा पंच) । तत्र प्रथमाध्ययने स्वसमयपरसमयप्ररूपणा । द्वितीये स्वसमयगुणान् परसमयदोषांश्च ज्ञात्वा स्वसमय एव बोधो विधेय इति ॥ तृतीयाध्ययने तु सबुद्ध सन्नुपसर्गसहिष्णुर्नवति तदनिधीयते ॥ चतुर्थे स्त्रीदोषविवर्जना ॥ पचमेत्वयमर्थाधिकार ॥ तद्यथा ॥ उपसर्गाऽसहिष्णो स्त्रीवशवर्तिनोऽवश्य नरकेषु पात इति ॥ षष्ठे पुनरेवमित्यनुकूलप्रतिकूलोपसर्गसहनेन स्त्री वर्जनेन च नगवान् महावीरो जेतव्यस्य कर्मण ससारस्य वा पराजवेन जयमाह ॥

द्त्ते समुयारो णत्थि पुहुत्ते समोयारो ॥ १ ॥ तथा ॥ आसज्ज उ सोयारं नएनय वि सारउ बूया' ॥ संख्याप्रमाण त्वष्टधा ॥ नाम, स्थापना, द्रव्य, क्षेत्र, काल, परिमा ण, पर्यंच, भाव, भेदात् । तत्रापि परिमाणसंख्यायां समवतार ॥ सापि कालिकदृष्टि वादभावात् द्विधा ॥ तत्रास्य कालिकपरिमाणसंख्यायां समवतारस्तत्राप्यंगानंगयोर गप्रविष्टे समवतार । पर्यवसंख्यायां त्वनंता पर्यवा ॥ तथा संख्येयान्यक्षराणि संख्ये या संघाता संख्येयानि पदानि संख्येया श्लोका संख्येया गाथा संख्येया वेदा संख्येयान्यनुयोगद्वाराणि । सांप्रतं वक्तव्यतायां समवतारश्चिंत्यते ॥ साच स्व, पर, समय,तदुभयभेदात्रिधा । तत्रेदमध्ययनं त्रिविधायामपि समवतरति । अर्थाधिकारो द्वेधा॥ अध्ययनार्थाधिकार उद्देशार्थाधिकारश्च । तत्राध्ययनार्थाधिकारोऽभिहित । उद्देशार्थाधि कारं तु गाथांतरित निर्युक्तिकृ द्वक्ष्यति । सांप्रतं निक्षेपावसर सच त्रिधा । उंघनिष्पन्नो ना मनिष्पन्न सूत्रालापकनिष्पन्नश्च । तत्रौघनिष्पन्नेऽध्ययनं तस्यच निक्षेप आवश्यकादौ प्रब धेनाभिहित एव । नामनिष्पन्नेतु समय इति॥२८॥नाम तन्निक्षेपार्थं निर्युक्तिकार आह॥ "ना मठवणा दविए खेत्ते काले कुतित्थसंगारे ॥ कुलगणसंकरगंडी । बोधव्वा भावसमएय" ॥२९॥ (नाम ठवणाइत्यादि) । नाम, स्थापना, द्रव्य, क्षेत्र, काल, कुतीर्थ, संगार, कुल, गण, संकर गंडी, भाव, भेदात् द्वादशधा समयनिक्षेप । तत्र नामस्थापने क्षुण्णे । द्रव्यसमयो द्रव्यस्य सम्यगयनं परिणतिविशेष स्वभाव इत्यर्थ । तद्यथा । जीवद्रव्यस्योपयोग पुद्गलद्रव्यस्य मूर्तत्वं धर्माधर्माकाशानां गतिस्थित्यवगाहदानलक्षणोऽथवा योयस्य द्र व्यस्यावसरो द्रव्यस्योपयोगकाल इति ॥ तद्यथा ॥ 'वर्षासु लवणममृतं शरदि जलं गो पयश्च हेमंते ॥ शिशिरे चामलकरसो घृतं वसंते गुडश्चांते' ॥ १ ॥ क्षेत्रसमय क्षेत्रमाका श तस्य समय स्वभाव । यथा ॥ ' एगेणविसेपुसे दोहिविपुणे सयपि माएज्जा ॥ लखस एणविपुसे, कोडिसहस्सं पि माएज्जा' ॥१॥ यदि वा देवकुरुप्रभृतीनां क्षेत्राणामीदृशोऽनु भावो यदुत तत्र प्राणिन सुरूपा नित्यसुखिनो निर्वैराश्च भवतीति क्षेत्रस्य वा परिकर्मणाव सर क्षेत्रसमय इति ॥ कालसमयस्तु सुषमादेरनुभावविशेष । उत्पलपत्रशतभेदानि व्यग्यो वा कालविशेष कालसमय इति ॥ अत्र च द्रव्यक्षेत्रकालप्राधान्यविवक्षया द्रव्यक्षे त्रकालसमयता द्रष्टव्येति । कुतीर्थसमय पाखंडिकानामात्मीयानात्मीय आगमविशेष स्तदुक्तं वानुष्ठानमिति ॥ संगार संकेतस्तद्रूप समय संगारसमय ॥ यथा सिद्धार्थसार थिदेवेन पूर्वकृतसंगारानुसारेण गृहीतहरिशवो बलदेव प्रतिबोधित इति ॥ कुलसमय कुलाचारो यथा शकानां पितृशुद्धि आभीरकाणां मथनिका शुद्धि । गणसमयो यथा॥ मल्लानामयमाचारो यथा यो ह्यनाथोमल्ला म्रियते स तै संस्क्रियते पतितश्चोध्रियत इति । संकरसमयस्तु संकरोभिन्नजातीयानां मीलकस्तत्र च समये एकवाक्यता ॥ यथा वाममा

१२३४५ इत्यादि॥तत्र।'गणितेत्यविनक्ते तु लब्ध शेषैर्विनाजयेत् ॥ आदावते च
२१३४५ स्थाप्य विकल्पगणिते क्रमात्'॥१॥ अथ श्लोक शिष्यहितार्थं
१३२४५ त्र सुखावगमार्थं षट् पदानि समाश्रित्य तावत् श्लोकार्थो योज्यते ।
३१२४५ षट् पदानि स्थाप्यानि । १२३४५६ । एतेषा परस्परताडनेन
२३१४० विंशत्युत्तराणि गणितमुच्यते । तस्मिन् गणितेऽस्योत्र षट्कस्तेन नागे
३२१४५ शत्युत्तर शतं लभ्यते तच्च पक्षा पंक्तीनामत्यपंक्तो षट्काना न्यस्यते ।
१२४३५ पचकाना विंशत्युत्तरमेवशतम्॥एवमधोधश्चतुष्कत्रिकद्विकैकाना प्रत्येक विंश
त्युत्तरशतं न्यस्यमेवमत्यपंक्तो सप्त शतानि विंशत्युत्तराणि नवत्येषा च गणितप्रक्रियाया
दिरुच्यते । तथा यत्तद्विंशत्युत्तर शत लब्ध तस्य च पुन शेषेण पचकेन नागेनापहते ल
ब्धा चतुर्विंशतिस्तावतस्तावन्तश्च पचकचतुष्कत्रिकद्विकैका प्रत्येक पचमपंक्तौ न्यस्या याव
द्विंशत्युत्तर शतमिति॥ तदधोग्रतो न्यस्तमक मुक्त्वा येन्ये तेषा यो यो महत्सख्य स सोष
स्ताच्चतुर्विंशतिसख्य एव तावत् न्यस्यो यावत्सप्तशतानि विंशत्युत्तराणि पचमपंक्तावपि
पूर्णानि नवति ॥ एषा च गणितप्रक्रियेत्यभिधीयते ॥ एवमनया प्रक्रियया चतुर्विंशते शे
षचतुष्ककेन नागे हते षट् लभ्यते तावतश्चतु पंक्ता चतुष्कका स्थाप्यास्तदध षट्त्रिका
पुनर्द्विका नूय एकका पुन पूर्वन्यायेन पंक्ति पूरणीया ॥ पुन षट्कस्य शेषत्रिकेण
नागे हते द्वौ लभ्येते तावन्मात्रौ त्रिकौ तृतीयपंक्तौ शेष पूर्ववत् ।शेषपंक्ति द्वये शेषमक द्व
य क्रमोत्क्रमाभ्या व्यवस्थाप्यमिति ॥ तथा नाम्नि षड्विधनाम्न्यवतरति । यतस्तत्र षड्
नावा प्ररूप्यते । श्रुतस्यच क्षायोपशमिकनाववर्तित्वात् । प्रमाणमधुना प्रमीयतेनेने
ति प्रमाण॥तत् द्रव्यक्षेत्रकालनावभेदाच्चतुर्द्धा । तत्रास्याध्ययनस्य क्षायोपशमिकनावव्य
वस्थितत्वाद्भावप्रमाणेऽवतार । नावप्रमाण च गुण, नय, सख्या, नेदात्रिधा । तत्रापि गु
णप्रमाणे समवतार । तदपि जीवाजीवभेदाद् द्विधा । समयाध्ययनस्य च क्षायोपशमिक
नावरूपत्वात्तस्य च जीवानन्यत्वाज्जीवगुणप्रमाणे समवतार । जीवगुणप्रमाणमपि ज्ञान,
दर्शन, चारित्र, नेदात्रिविध । तत्रास्य बोधरूपत्वात् ज्ञानगुणप्रमाणे समवतार॥ तदपि
प्रत्यक्षानुमानोपमानागमभेदाच्चतुर्द्धा । तत्रास्यागमप्रमाणे समवतार ॥ सोपि लौ
किक, लोकोत्तर, नेदाद् द्विधा ।तदस्य लोकोत्तरे समवतारस्तस्य च सूत्रार्थतदुनयरूपत्वा
त्त्रैविध्य । त्रिष्वपि समवतार । यदि वाऽत्मानतरपरपरनेदादागमस्त्रिविधस्तत्र तीर्थ
कृतामर्थापेक्षयाऽत्मागमो गणधराणामनतरागमस्तच्छिष्याणा परपरागम । सूत्रापेक्षया
तु गणधराणामात्मागमस्तच्छिष्याणामनतरागमस्तदन्येषा परपरागम । गुणप्रमाणानत
र नयप्रमाणावसरस्तस्य चेदानीं पृथक्त्वानुयोगे नास्ति समवतारो नवेद्वा पुरुषापे
क्षया ॥ तथा चोक्त ॥ मूढनइय सुय का,लियतुगणया समोरयति इह ॥ अपु

गत उंधनामनिष्पन्ननिक्षेपयोरंतर्गतत्वात् । तथाच वक्ष्यमाणस्य सूत्रस्य निक्षेपावसरत्वा त् । उपोद्घातनिर्युक्त्यानुगमस्तु पड्विंशति द्वारप्रतिपादकागाथा द्वयादवसेयस्तच्चेद उद्देश निर्देशोय इत्यादि । सूत्रस्पर्शिकनिर्युक्त्यनुगमस्तु सूत्रे सति संभवति ॥ सूत्र च सूत्रानुगमे सचावसरप्राप्त एव । तत्राऽस्खलितादिगुणोपेत सूत्रमुच्चारणीय । तच्चेद ॥ बुज्झिज्जत्ति तिउट्टि ज्जत्यादिश्लोक । अस्य संहितादिक्रमेण व्याख्या । (बुध्यतेत्यादि) । सूत्रमिद सूत्रकृता गादौ वर्तते । अस्यच ऽऽचारांगेन सहाय संबध । तद्यथा आचारागेनिहित । ' जीवो छ कायपरू, वणायतेसिं वहेणबंधोत्ति इत्यादि तत्सर्व बुध्येतेत्यादि । यदि चेह केषाचि द्वादिना ज्ञानादेवमुक्त्यवाप्तिरन्येषा क्रियामात्रात् । जैनाना तूनान्या निश्रेयसाधिगम इत्ये तदनेन श्लोकेन प्रतिपाद्यते । तत्रापि ज्ञानपूर्विका क्रिया फलवती भवतीत्यादि बुध्येते त्यनेन ज्ञानमुक्त॥त्रोटयेदित्येनेनच क्रियोक्ता॥तत्रायमर्थो बुध्येतावगच्छेत् बोध विदध्यादित्यु पदेश । किंपुनस्तद्बुध्येत तदाह । बंधन बध्यते जीवप्रदेशैरन्योन्यानुवेधरूपतया व्यवस्था प्यत इति बंधन ज्ञानावरणाद्यष्टप्रकार कर्म तद्धेतवो वा मिथ्यात्वाऽविरत्यादय परि ग्रहारंभादयो वा । नच बोधमात्रादभिलषितार्थावाप्तिर्भवतीत्यत क्रिया दर्शयति । त च बंधन परिज्ञाय विशिष्टया क्रियया सयमानुष्ठानरूपया त्रोटयेदपनयेदात्मन पृथक्कुर्या त्परित्यजेद्वा । एव चाभिहिते जबूस्वाम्यादिको विनेयो बंधादिस्वरूप विशिष्ट जिज्ञासु प प्रच्छ ॥ किमाह किमुक्तवान् बंधन वीरस्तीर्थकृत् किंवा जानन्नवगच्छस्तद्बंधन त्रोटयति ततो वा त्रुट्यतीति श्लोकार्थ ॥ १ ॥ बंधनस्वरूपनिर्वचनायाह ॥ (चित्तमतमचित्त वे त्यादि)॥ इह बंधन कर्म तद्धेतवो वाऽभिधीयते ॥ तत्र न निदानमन्तरेण निदानिनो जन्मेति निदानमेव दर्शयति ॥ तत्रापि सर्वारंभा कर्मोपादानरूपा प्रायश आत्मात्मी यग्रहोत्थानामिति कृत्वाऽदो परिग्रहमेव दर्शितवान् ॥ चित्तमुपयोगो ज्ञान तद्विद्यते य स्य तच्चित्तवत् द्विपदचतुष्पदादि । ततोन्यदचित्तवत् कनकरजतादि तदुभयरूपमपि परि ग्रह परिगृह्य कृशमपि स्तोकमपि तृणतुषादिकमपीत्यर्थ । यदि वा कसन कस परिग्रह ग्रहणबुध्या जीवस्य गमनपरिणाम इति यावत् । तदेव स्वत परिग्रह परिगृह्यान्यान्वा ग्राहयित्वा गृह्णतो वान्याननुज्ञाय दु खयतीति दु खमष्टप्रकार कर्म तत्फल वा असा तादयादिरूपं तस्मान्न मुच्यत इति । परिग्रहाग्रह एव परमार्थतोनर्थमूल भवति । तथा चोक्त । 'ममाहमिति चेष यावदभिमानदाहज्वर कृतातमुखमेव तावदिति न प्रशात्युन्न य ॥ यश सुखपिपासितैरयमसावनर्थोत्तर परैरपसद कुतोपि कथमप्यपाकृष्यते' ॥ १ ॥ तथाच ॥ द्वेषस्यायतन धृतेरपचय क्षांते प्रतीपो विधिर्व्याक्षेपस्य सुहृन्मदस्य भवन ध्या नस्य कष्टो रिपु ॥ दु खस्य प्रभव सुखस्य निधन पापस्य वासो निज प्राज्ञस्यापि परिग्र हो ग्रहइव क्लेशाय नाशायच' ॥ १ ॥ २ ॥

गीदावनाचारप्रवृत्तावपि शुचिकरणमिति । गडीसमयो यथा शाक्यानां
डीताडनमिति । नावसमयस्तु नो आगमत इदमेवाध्ययनमनेनैवात्राधिकार
तु शिष्यमतिविकासार्थमुपन्यास इति ॥२९॥सांप्रतं नाऽध्यय. दे ।
ऽह ॥ "मह्पचनूय एक्क, प्पएय तज्जीवतस्सरीरेय ॥ तहय अगार गवाती
अफलवादी ॥३०॥ बीए नियवाईउं, अण्णाणियतह्य नाणवाईउं ॥ कम्म च
चउविहं निक्खुसमयंमि ॥ ३१॥ तइए आहाकम्म, कडवाई जह्यतेयवाईउं ॥
य चउत्थे, परप्पवाई अविरएसु ' ॥ ३२ ॥ मह्पचनूय इत्यादिगाथात्रय ।
स्य चत्वार उद्देशकास्तत्राद्यस्यषडर्थाधिकारा आद्यगाथयाऽभिहिता ॥ तद्यथा ।
नि पृथिव्यप्तेजोवाय्वाकाशाख्यानि महांति च तानि सर्वलोकव्यापित्वात् भूतानि च
हाभूतानि इत्ययमेकोऽर्थाधिकार । तथा चेतनाचेतन सर्वं मेकात्मविवर्त
तवाद प्रतिपाद्यत इत्यर्थाधिकारो द्वितीय । स चासो जीवश्च तज्जीव कायाकारो
परिणामस्तदेव शरीर जीवशरीरयोरैक्यमिति यावदिति तृतीयोर्थाधिकार । त
जीव सर्वस्या पुण्यपापक्रियाया इत्येववादीति चतुर्थोधिकार ॥ तथात्मा षष्ठ इति
चाना भूतानामात्मा षष्ठ प्रतिपाद्यत इत्यय पचमोर्थाधिकार । तथा-फलवादीति
न विद्यते कस्याश्चित् क्रियाया फलमित्येव वादी च प्रतिपाद्यत इति षष्ठोर्थाधिकार इ
ति । द्वितीयोद्देशकेचत्वारोर्थाधिकारा ॥तद्यथा । नियतिवादस्तथाऽज्ञानिकमतं
च प्रतिपाद्यते । कर्म च चयमुपचय चतुर्विधमपि न गच्छति भिक्षुसमये शाक्यागमे
चतुर्थोर्थाधिकार । चातुर्विध्यतु कर्मणो ऽविज्ञोपचित ॥ अविज्ञानमविज्ञा तयोपचि
तमनाभोगकृतमित्यर्थ । यथा मातु स्तनाद्याक्रमणेन पुत्रव्यापत्तावप्यनाभोगान्नक
र्मोपचीयते । तथा परिज्ञान परिज्ञा केवलेन मनसा पर्यालोचन तेनापि कस्यचित्प्रा
णिनो व्यापादनाभावात् कर्मोपचयाभाव इति । तथा ईरणमीर्यागमन तेन जनि
तमीर्याप्रत्यय तदपि कर्मोपचय न गच्छति प्राणिव्यापादनाभिसंधेरभावादिति । तथा
स्वप्नांतिक स्वप्नप्रत्यय कर्म नोपचीयते । यथा स्वप्नभोजने तृप्त्यभाव इति तृतीयोद्देश
केत्वयमर्थाधिकार । तथा आधाकर्मगतविचारस्तद्भोजिना च दोषोपदर्शनमिति । तथा
कृतवादी च भण्यते । तद्यथेश्वरेण कृतोय लोक प्रधानादिकृतो वा ॥ यथा च ते प्रतिवादि
न आत्मीय कृतवाद गृहीत्वोपस्थितास्तथा भण्यत इति द्वितीयोधिकार । चतुर्थोद्देशकाधि
कारस्त्वय । तद्यथा ॥ अविरतेषु गृहस्थेषु यानि कृत्यान्यनुष्ठानानि स्थितानि तैरसंयमप्र
धानै कर्तव्यै परप्रवादी परतीर्थिक उपमीयत इति । इदानीमनुगम सच द्वेधा । सूत्रा
नुगमो निर्युक्त्यनुगमश्च । तत्र निर्युक्त्यनुगमस्त्रिविध । तद्यथा । निक्षेपनिर्युक्त्यनुगम
उपोद्घातनिर्युक्त्यनुगम सूत्रस्पर्शिकनिर्युक्त्यनुगमश्च । तत्र निक्षेपनिर्युक्त्यनुगमोऽनु

रेण बधनमेवाह् । सयंतीत्यादि । स परिग्रहवानसतुष्टो नूयस्तदर्जनपर समार्जितोप इवकारिणि च द्वेषमुपगतस्तत स्वयमात्मना त्रिन्यो मनोवाक्कायेन्य आयुर्बलशरीरेन्यो वा पातयेत् च्यावयेत् प्राणान् प्राणिन । अकारलोपाद्वा अतिपातयेत् प्राणानिति । प्राणाश्चामी । पचेंद्रियाणि त्रिविध बलच, उच्छ्वासनिश्वासमथान्यदायु ॥ प्राणा दशैते नगवद्भिरुक्ता,स्तेषा वियोजीकरण तु हिसा ॥ १ ॥ तथा स परिग्रहाग्रही न केवल स्वतो व्यापादयति अपरैरपि घातयति घ्नतश्चान्यान् समनुजानीते तदेव कृतकारितानुमतिनि. प्राण्युपमर्दनेन जन्मांतरशतानुबध्यात्मनो वैर वर्धयति । ततश्च दुखपरपरारूपबधनान्न मुच्यत इति । प्राणातिपातस्य चोपलक्षणार्थत्वात् मृषावादादयोपि बंधहेतवो इष्टव्या इति ॥ ३ ॥ पुनर्बंधनमेवाश्रित्याह । ( जेस्सिमित्यादि ) । यस्मिन् राष्ट्रकूटादौ कुले जातो यैर्वा सह पासुक्रीमितैर्नार्यादिनिर्वा सह सवसेन्नरस्तेषु मातृपितृन्रातृनगिनीनार्यावयस्यादिषु ममायमिति ममत्ववान् स्निह्यन् लुप्यते विलुप्यते ममत्वजनितेन कर्मणा नारकतिर्यड्मनुष्यामरलक्षणे ससारे न्रम्यमाणो बाध्यते पीड्यते। कोसौ बालोऽज्ञ स दसद्विवेकरहितत्वादन्येष्वन्येषु च मूर्छितो गृद्धोऽध्युपपन्नो ममत्वबहुल इत्यर्थ । पूर्व तावन्मातापित्रोस्तदनुनार्याया पुन पुत्रादौ स्नेहवानिति ॥ ४ ॥

वित्त सोयरिया चेव, सवमेय नताणइ॥ सखाए जीविञ्च चेवं, कम्मुणा उ तिउट्टइ ॥५॥ एए गथे विउक्कम्म, एगे समणमाह णा ॥ अयाणता विउस्सित्ता सत्ता कामेहि माणवा ॥ ६ ॥

अर्थ–हवे जे प्रथम कह्यु हतुके, कहेवु जाणतो थको बंधन त्रोडे ते कहेछे. वित्त के० धनधान्यादिक सचित्त तथा अचित्त वस्तु अने सोयरियाके० नाइ प्रमुख कौटुंबिक स्वजनादिक चेवके० वली सवमेयके० ए सर्व जे कुटुबादिक स्नेहवतछे, ते शारीरी, मानसी वेदना नोगवता थका ए जीवने नताणइके० त्राण नणी न थाय एवु जाणीने जीवियंचके० जे प्राणीउनु जीवतव्य अल्पछे एयके० एवु सखाएके० जाणीने, जीवितव्य प्राणीउने एटले परिग्रह प्राणिघात अने स्वजन स्नेहादिक बधनना स्थानने ज्ञपरिज्ञाये जाणीने, प्रत्याख्यान परिज्ञाये ठांमिने, कम्मुणाउ तिउट्टइके० कर्म थकी छूटे अर्थात् कर्म थकी वेगलो थाय ॥ ५ ॥ हवे स्वसमयनो अधिकार कही परसमयनो अधिकार कहेछे एएगथेके० ए अरिहतना नावित ग्रथ जे करुणारसमय छे ते ने गमीने स्वेछाये रचित ग्रथोने विषे विउक्कम्मके० आसक्त थका, एगेसमणाके० एक शाक्यादिकना श्रमण, बीजा बृहस्पतिमतानुसारी एवा माहणा के० ब्राह्मण ए अयाणताके० परमार्थना अजाण थका विउस्सित्ता के० विविध प्रकारे उत्प्रबलपणे पोताना

सयं निवायए पाणे, अडुवाऽन्नेहिं घायए ॥ हणंतं वा णुजा
णाइ, वेरं वड्ढइ अप्पणो ॥३॥ जेस्सिं कुले समुप्पन्ने जेहिं वा सं
वसे नरे ॥ ममाइ लुप्पई वाले, अणे अणेहिं मुछिए ॥ ४ ॥

अर्थ–हवे ज्यां परिग्रह त्यां आरंभ होय, अने ज्यां आरंभ त्यां प्राणातिपात होय एवुं देखाडेछे ते परिग्रहवंत पुरुष असंतोषी थतो ते परिग्रह उपार्जवाने अर्थे, अने उपार्जन करेलो परिग्रह राखवाने अर्थे सयंके० पोते, पाणेके० प्राणीर्उनो, निवायएके० निपात एटले विनाश करे, अडुवाके० अथवा अन्नेहिं घायएके० अनेरा पासे प्राणीर्उनी घात करावे, वाके० अथवा हणंत के० जे प्राणीर्उने हणतो होय अर्थात् प्राणीर्उनो विनाश करतो होय तेने अणुजाणाइके० अनुमोदवे करी प्राणीर्उनी घात करतो थको अथवा करावतो थको अप्पणोके० आत्माने वेरवड्ढइके० वैरनी वृद्धी करेछे तेथी जे डुःख परंपरारूप बंधन तेथकी बुटे नहीं ॥३॥ वली पण बंधन आश्रयी कहेछे जेस्सिं कुले समुप्पन्नेके० रागोडादिक जे कुलमां उत्पन्न थयो, अथवा जेहिंवा संवसे के० जेनी साथे वास वसे, एटले पांसुक्रीडादिक करे एवा नरेके० मनुष्य जे माता, पिता, नाई, बेहेन, नार्या, अने मित्रादिक तेने विषे ममाइके० ममत्वनो करनार एटले मातापितादिकनी साथे स्नेह करतो एवो वालेके० अज्ञानी जीवते लुप्पइके० कर्मे संसारचक्रमांहे नमतो थको पीडायछे, ते मनुष्य केवोछे तोके अणेअणेहिंके० अन्य अन्य एटले प्रथम माता पिता, तदनंतर नाईने विषे, तदनंतर पुत्रपौत्रादिक, एम अन्य अन्यने विषे मुछिएके० मूर्छित एटले मूर्छा पामतो थको स्नेहे करी पीडायछे ॥ ४ ॥

दीपिका ॥ अथवा प्रकारांतरेण बंधनमेवाह । सयंतीति ॥ सपरिग्रहवान् स्वयमात्मना प्राणानतिपातयेत् जीवान् हिंस्यात् । अथवा अन्यैः परैरपि घातयति घ्नतश्चान्याननु जानीते तदेवं कृतकारितानुमतिभिः प्राणिघातं कुर्वन्नात्मनो वैरं वर्धयति ततश्च बंधनान्न मुच्यते इति नावः ॥ ३ ॥ पुनर्बंधनमेवाश्रित्याह । जेस्सिमिति । यस्मिन् कुले जातो यैर्वा मित्रैर्नार्यादिभिर्वा सह संवसेन्नरः तेषु मित्रपितृमातृनार्यादिषु ममायमिति ममत्ववान् लुप्यते ममत्वजनितेन कर्मणा बाध्यते । बालो मूर्खः विवेकरहितत्वादन्येषु च मूर्छितो ममत्वबहुल इत्यर्थः ॥ ४ ॥

टीका ॥ तथाच परिग्रहेष्वप्राप्तनष्टेषु कांक्षाशोकौ प्राप्तेषु च रक्षणमुपनोगे वाऽतृप्तिरित्येवं परिग्रहे सति डुःखात्मकाद्बंधनान्न मुच्यत इति परिग्रहवतश्चावश्यंनाव्यारंनस्तस्मिंश्च प्राणातिपात इति दर्शयितुमाह । सयंनिवायएपाणे इत्यादि । यदि वा प्रकारांत

रेण बंधनमेवाह् । सर्यतीत्यादि । स परिग्रहवानसंतुष्टो भूयस्तदर्जनपर समार्जितोप द्रवकारिणि च द्वेषमुपगतस्तत स्वयमात्मना त्रिभ्यो मनोवाक्कायेभ्य आयुर्बलशरीरेभ्यो वा पातयेत् च्यावयेत् प्राणान् प्राणिन । अकारलोपाद्वा अतिपातयेत् प्राणानिति । प्रा णाश्चामी । पचेंद्रियाणि त्रिविध बलंच, उच्छ्वासनिश्वासमथान्यदायु ॥ प्राणा दशैते भगव द्भिरुक्ता,स्तेषां वियोजीकरण तु हिंसा ॥ १ ॥ तथा स परिग्रहाग्रही न केवल स्वतो व्या पादयति अपरैरपि घातयति घ्नतश्चान्यान् समनुजानीते तदेव कृतकारितानुमतिभि प्राण्युपमर्दनेन जन्मांतरशतानुबंध्यात्मनो वैर वर्धयति । ततश्च दु खपरपरारूपबंधनान्न मुच्यत इति । प्राणातिपातस्य चोपलक्षणार्थत्वात् मृषावादादयोपि बंधहेतवो इष्टव्या इति ॥ ३ ॥ पुनर्बंधनमेवाश्रित्याह । ( जेस्सिमित्यादि ) । यस्मिन् राष्ट्रकूटादौ कुले जातो यैर्वा सह पांसुक्रीडितैर्भार्यादिभिर्वा सह सवसेन्नरस्तेषु मातृपितृभ्रातृभगिनीभार्यावय स्यादिषु ममायमिति ममत्ववान् स्निह्यन् लुप्यते विलुप्यते ममत्वजनितेन कर्मणा नारकतिर्यङ्मनुष्यामरलक्षणे ससारे भ्रम्यमाणो बाध्यते पीड्यते। कोसौ बालोऽज्ञ स दसद्विवेकरहितत्वादन्येष्वन्येषु च मूर्छितो गृद्धोध्युपपन्नो ममत्वबहुल इत्यर्थ । पूर्वं तावन्मातापित्रोस्तदनुभार्यायां पुन पुत्रादौ स्नेहवानिति ॥ ४ ॥

वित्त सोयरिया चेव, सवमेय नताणइ॥ सखाए जीविअं चेव,
कम्मुणा उ तिउट्टइ ॥५॥ एए गथे विउक्कम्म, एगे समणमाह
णा ॥ अयाणता विउस्सित्ता सत्ता कामेहि माणवा ॥ ६ ॥

अर्थ–हवे जे प्रथम कह्यु हतुके, कहेवुं जाणतो थको बंधन त्रोडे ते कहेवे. वित्तं के० धनधान्यादिक सचित्त तथा अचित्त वस्तु अने सोयरियाके० भाइ प्रमुख कौटुंबि क स्वजनादिक चेवके० वली सवमेयंके० ए सर्व जे कुटुंबादिक स्नेहवतछे, ते शारीरी, मानसी वेदना भोगवता थकां ए जीवने नताणइके० त्राण भणी न थाय एवुं जाणी ने जीविर्यचके० जे प्राणीउंनु जीवतव्य अल्पछे एयके० एवु सखाएके० जाणीने, जी वितव्य प्राणीउंने एटले परिग्रह प्राणिघात अने स्वजन स्नेहादिक बंधननां स्थानने ज्ञ परिज्ञाये जाणीने, प्रत्याख्यान परिज्ञाये छांमिने, कम्मुणाउ तिउट्टइके० कर्म थकी त्रुटे अ र्थात् कर्म थकी वेगलो थाय ॥ ५ ॥ हवे स्वसमयनो अधिकार कही परसमयनो अधिकार कहेवे एएगथेके० ए अरिहंतना भावित ग्रंथ जे करुणारसमय छे ते ने छांमीने स्वेछायें रचित ग्रंथोने विषे विउक्कम्मके० आसक्त थका, एगेसमणके० एक शाक्यादिकना श्रमण, बीजा बृहस्पतिमतानुसारी एवा माहणा के० ब्राह्मण ए अया णताके० परमार्थना अजाण थका विउस्सित्ता के० विविध प्रकारे बलवत्तपणे पोताना

सय निवायए पाणे, अडुवाऽन्नेहिं घायए ॥ हणंत वा णुजा
णाइ, वेरं वड्ढइ अप्पणो ॥३॥ जेस्सिं कुले समुप्पन्ने जेहिं वा सं
वसे नरे ॥ ममाइ लुप्पई बाले, अन्ने अन्नेहिं मुछिए ॥ ४ ॥

अर्थ—हवे ज्यां परिग्रह त्यां आरंभ होय, अने ज्यां आरंभ त्यां प्राणातिपात होय एवुं देखाडेछे ते परिग्रहवंत पुरुष असंतोषी थको ते परिग्रह उपार्जवाने अर्थे, अने उपार्जन करेलो परिग्रह राखवाने अर्थे सयके॰ पोते, पाणेके॰ प्राणीउनो, निवायएके॰ निपात एटले विनाश करे, अडुवाके॰ अथवा अन्नेहिं घायएके॰ अनेरा पासे प्राणीउनी घात करावे, वाके॰ अथवा हणंत के॰ जे प्राणीउने हणतो होय अर्थात् प्राणीउनो विनाश करतो होय तेने अणुजाणाइके॰ अनुमोदवे करी प्राणीउनी घात करतो थको अथवा करावतो थको अप्पणोके॰ आत्माने वेरवड्ढइके॰ वैरनी वृद्धी करेछे ते थी जे डुःख परंपरारूप बंधन तेथकी बुटे नहीं ॥३॥ वली पण बंधन आश्रयी कहेछे जेस्सिं कुले समुप्पन्नेके॰ राठोडादिक जे कुलमां उत्पन्न थयो, अथवा जेहिंवा संवसे के॰ जेनीसाथे वास वसे, एटले पांसुक्रीडादिक करे एवा नरेके॰ मनुष्य जे माता, पिता, नाई, बेहेन, नार्या, अने मित्रादिक तेने विषे ममाइके॰ ममत्वनो करनार एटले मातापितादिकनी साथे स्नेह करतो एवो बालेके॰ अज्ञानी जीवते लुप्पइके॰ कर्मे संसारचक्रमांहे नमतो थको पीडायछे, ते मनुष्य केवोछे तोके अन्नेअन्नेहिंके॰ अन्य अन्य एटले प्रथम माता पिता, तदनंतर नाईने विषे, तदनंतर पुत्रपौत्रादिक, एम अन्य अन्यने विषे मुछिएके॰ मूर्छित एटले मूर्छा पामतो थको स्नेहे करी पीडायछे ॥ ४ ॥

---

दीपिका ॥ अथवा प्रकारांतरेण बंधनमेवाह । सयतीति ॥ सपरिग्रहवान् स्वयमात्मना प्राणानतिपातयेत् जीवान् हिंस्यात् । अथवा अन्यैः परैरपि घातयति घ्नतश्चान्याननु जानीते तदेव कृतकारितानुमतिभिः प्राणिघातं कुर्वन्नात्मनो वैरं वर्धयति ततश्च बंधनान्न मुच्यते इति नावः ॥ ३ ॥ पुनर्बंधनमेवाश्रित्याह । जेस्सिमित्ति । यस्मिन् कुले जातो यैर्वा मित्रैर्नार्यादिभिर्वा सह संवसेन्नरः तेषु मित्रपितृमातृनार्यादिषु ममायमिति ममत्ववान् लुप्यते ममत्वजनितेन कर्मणा बाध्यते । बालो मूर्खः विवेकरहितत्वादन्येषु च मूर्छितो ममत्वबहुल इत्यर्थः ॥ ४ ॥

---

टीका ॥ तथाच परिग्रहेष्वप्राप्तनष्टेषु कांक्षाशोकौ प्राप्तेषु च रक्षणमुपनोगे वाऽतृप्तिरि त्येवं परिग्रहे सति डुःखात्मकाद्बंधनान्न मुच्यत इति परिग्रहवतश्चावश्यंनाव्यारंजस्त स्मिंश्च प्राणातिपात इति दर्शयितुमाह । सयनिवायएपाणे इत्यादि । यदि वा प्रकारांत

कश्चित् किंतु विज्ञानमेवैकं विवर्ततइति । क्षणिका सर्वसंस्कारात्यादि । तथा सांख्या एवं व्यवस्थिता । सत्वरजस्तमसां साम्यावस्था प्रकृतिः 'प्रकृतेर्महान्' महतोऽहंकारस्तस्माद्गणश्च षोडशकस्तस्मात्षोडशकादपि पंचनूतानि चैतन्यं पुरुषस्य स्वरूपमित्यादि । वैशेषिका पुनराहुः । इव्य, गुण, कर्म, सामान्य, विशेष, समवायाः षट् पदार्थाइति । तथा नैयायिकाः प्रमाणप्रमेयादीनां पदार्थानामन्वयव्यतिरेकपरिज्ञानान्निःश्रेयसाधिगमइति व्यवस्थिताः । तथा मीमांसकाश्चोदनालक्षणोधर्मो नच सर्वज्ञः कश्चिद्विद्यते मुक्त्यनावश्चेत्येवमाश्रिताः । चार्वाकास्त्वेवमनिहितवंतो यथा नास्तिकश्चित्परलोकयायी नूतपंचकाद्व्यतिरिक्तः पदार्थो नापि पुण्यपापे स्तइत्यादि । एवंचागीकृत्य ते लोकायतिका । मानवाः पुरुषाः सक्ताः गृद्धा अध्युपपन्नाः कामेष्विबामदनरूपेषु । तथाचोचुः । एतावानेव पुरुषो, यावानिंडियगोचरः ॥ नद्वेवृकपदं पश्य, यद्वदंत्यबहुश्रुताः ॥ १ ॥ पिब खाद च साधु शोजने यदतीतं वरगात्रि तन्न ते ॥ नहि नीरु गतं निवर्तते, समुदयमात्रमिदं कलेवरं ॥ २ ॥ एवं ते तंत्रांतरीयाः स्वसमयार्थवासितांतःकरणाः संतो नगवदर्हदुक्तं ग्रथार्थमज्ञातपरमार्थाः समतिक्रम्य स्वकीयेषु ग्रथेषु सिताः सबद्धाः कामेषु च सक्ताइति ॥ ६ ॥

संति पंच महब्भुया, इहमेगेसि माहिया ॥ पुढवी आउ तेऊ वा,
वाउ आगासपंचमा ॥ ७ ॥ एए पंच महब्भूया, तेब्भो एगोत्ति
आहिया ॥ अहतेसिं विणासेणं, विणासो होइ देहिणो ॥ ८ ॥

अर्थ—हवे ग्रंथकार प्रथम चार्वाकनुं मत देखाडेछे संतिपंचमहब्भूया के० ते चार्वाक एम कहेछे के जगतमां सर्वलोकव्यापी पंचमहानूत छे इहके० आ लोकमांहे, एगेसिं के० कोइ एक नूतवादी तेना मतने विषे आहियाके० कह्याछे ते कोण? तोके० पुढवी के० पृथ्वी कठिणरूप छे, आउके० अप्प ते इव्य लक्षणछे, तेऊके० तेज उष्णरूप, वाउके० वायु चलन लक्षण अने पंचमाके० पांचमुं आगासके० आकाश अवकाश लक्षण छे, ॥७॥ हवे एनुंज विशेष कहेछे एएपंचमहब्भूयाके० ए पूर्वे कह्याते जे पंचमहानूत तेब्भो के० ते थकीज एगोत्ति के० कोइ एक चिडूप ते नूत थकी अव्यतिरिक्त एवो आहिया के० आत्मा होय छे, परंतु जेम ए पांच नूत थकी पृथक् नूत एवो अन्य कोइ बीजो आत्मा छे, एवी रीते जे बीजा दर्शनी कल्पना करेछे तेम नथी केमके ए परलोकनो जनार, सुखडुःखनो नोगवनार जीव एवो पदार्थ कोइ बीजो नथी, एम ते चार्वाक कहेछे तेमने कोइ परवादी एम पूछे के, अहो चार्वाको ! तमारे मते पंचमहानूत थकी अन्य काइ आत्मा एवो पदार्थ नथी, तो मरण पाम्यो एम काण कहेवाय?

ग्रथनेविषे सत्ता एटले बधाणा, एतावता आपणा मतना कदाग्रही एवा उतां माणवाके० पु रुष जे छे, ते पोतपोताना मतना अनुरागेकरी, कामेहि के० इच्छामदनादिक तेनेविषे सत्ता के० आसक्त थका प्रवर्त्ते छे एटले पोतानो मार्ग लोकोमाहे प्रसिद्धपणे सारो करी देखाडेछे

॥ दीपिका–किं जानन् बधन त्रोटयतीत्यस्योत्तरमाह । ( वित्तमिति ) । वित्त द्रव्यं तच्च सचित्तमचित्त वा । सोदर्या भ्रातृभगिन्यादय सर्वमेतद्वित्तादिक ससारे पीड्यमानस्य जतो र्न त्राणाय न रक्षणाय भवतीति । एतत् सख्याय ज्ञात्वा तथा जीवितं स्वल्पमिति स ख्याय ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया प्रत्याख्याय कर्मण सकाशात् त्रुटयति अ पगच्छत्यसो । तुर्निश्चये त्रुटयेदेव । यदि वा कर्मणा क्रियया सयमानुष्ठानरूपया बधनात् त्रुटयति कर्मण पृथग्भवतीत्यर्थ ॥ ५ ॥ स्वसमय प्रतिपाद्य परसमयप्रतिपादयितुका म आह । (एएऽति) । एतान् पूर्वोक्तान् ग्रथान् सूत्रार्थान् व्युत्क्रम्य परित्यज्य एके केचित् श्रमणब्राह्मणा श्रमणा शाक्यादयो ब्राह्मणाश्च ( अयाणता ) परमार्थमजानाना ( विउस्सित्ता ) विविधमुत्प्राबल्येन सिता बद्धा स्वसमयेषु प्रतिबद्धा सत्त कामेषु च सक्ता वर्तंतइति ॥ ६ ॥

॥टीका–साप्रत यदुक्त प्राक् किंवा जानन् बधन त्रोटयतीत्यस्य निर्वचनमाह।(वित्तमित्या दि) । वित्त द्रव्य तच्च सचित्तमचित्त वा । तथा सोदर्या भ्रातृभगिन्यादय सर्वमपि चैत द्वित्तादिक ससारातर्गतस्यासुमतोऽतिकटुका शरीरमानसवेदनास्समनुभवतो न त्राणाय रक्षणाय भवतीत्येतत्सख्याय ज्ञात्वा । तथा जीवितं च प्राणिना स्वल्पमपि तत्सख्याय ज्ञप रिज्ञया । प्रत्याख्यानपरिज्ञया तु सचित्ताचित्तपरिग्रहप्राण्युपघातस्वजनस्नेहादीनि ब धनस्थानानि प्रत्याख्याय कर्मण सकाशात्त्रुटयति अपगच्छत्यसौ । तुरवधारणे । त्रुटयेदे वेति । यदि वा कर्मणा क्रियया सयमानुष्ठानरूपया बधनात्त्रुटयति । कर्मण पृथग्भ वतीत्यर्थ ॥ ५ ॥ अध्ययनार्थाधिकाराभिहितत्वात्स्वसमयप्रतिपादनानतर परसमयप्र तिपादनाभिधित्सयाऽह । (एएगथेविउक्कम्मेत्यादि) । एतानतरोक्तान् ग्रथान् व्युत्क्रम्य प रित्यज्य स्वरुचिविरचितार्थेषु ग्रथेषु सक्ता सिता बद्धा एके न सर्वे इति सबध । ग्रथा तिक्रमश्चैतेषा तदुक्तार्थानभ्युपगमात् । अनतरग्रथेषु चायमर्थोऽभिहितस्तद्यथा जीवा स्तित्वे सति ज्ञानावरणीयादि कर्मबधन तस्य हेतवो मिथ्यात्वाविरतिप्रमादादय परिग्रहा रभादयश्च । तत्रोटन च सम्यग्दर्शनाद्युपायेन मोक्षसद्भावश्चेत्येवमादिक । तदेवमेके श्रमणा शाक्यादयो बार्हस्पत्यमतानुसारिणश्च ब्राह्मणा एतानर्हदुक्तान् ग्रथानतिक्रम्य परमार्थमजानाना विविधमनेकप्रकारमुत्प्राबल्येन सिता बद्धा स्वसमयेष्वभिनिविष्टा । तथा च शाक्या एव प्रतिपादयति । यथा सुखदुःखेच्छाद्वेषज्ञानाधारभूतो नास्त्यात्मा

न्मात्राख्यानि । तत्र गधतन्मात्रात्पृथिवी गधरसरूपस्पर्शवती । रसतन्मात्रादापो रस रूपस्पर्शवत्य । रूपतन्मात्रात्तेजो रूपस्पर्शवत् । स्पर्शतन्मात्राद्वायु स्पर्शवान् । शब्द तन्मात्रादाकाश गधरसरूपस्पर्शवर्जितमुत्पद्यतइति । तथा वैशेषिका अपि नूतान्यनि हितवत । तद्यथा । पृथिवीत्वयोगात्पृथिवी । साच परमाणुलक्षणा नित्या । द्व्यणुकादि प्रक्रमनिष्पन्नकार्यरूपतया त्वनित्या । चतुर्दशभिर्गुणैरूप, रस, गध, स्पर्श, सख्या, परि माण, पृथक्त्व, सयोग, विनाग, परत्वा,परत्व, गुरुत्व, द्रवत्व, वेगाख्यैरुपेता । तथा प्त्वयोगादापस्ताश्च रूपरसस्पर्शसख्यापरिमाणपृथक्त्वसयोगविनागपरत्वापरत्वगुरुत्व स्वानाविकद्रवत्वस्नेहवेगवत्यस्तासु च रूप शुक्लमेव रसो मधुरएव स्पर्श शीतएवेति । तेजस्त्वानिसबधात्तेज । तच्च रूपस्पर्शसख्यापरिमाणपृथक्कसयोगविनागपरत्वापरत्वनै मित्तिकद्रवत्ववेगाख्यैरेकादशभिर्गुणैर्गुणवत् । तत्र रूप शुक्ल नास्वर च । स्पर्शउष्णएवेति । वायुत्वयोगाद्वायु । सचानुष्णशीतस्पर्शसख्यापरिमाणपृथक्त्वसयोगविनागपरत्वापरत्व वेगाख्यैर्नवभिर्गुणैर्गुणवान् । हृत्कपशब्दानुष्णशीतस्पर्शलिंग । आकाशमिति पारिनाषिकी संज्ञा एकत्वात्तस्य । तच्च सख्यापरिमाणपृथक्त्वसयोगविनागशब्दाख्यै षड्निर्गुणैर्गुण वत् । शब्दलिंगचेत्येवमन्यैरपि वादिभिर्नूतसन्नावाश्रयणे किमिति लोकायतिकमतापेक्ष या नूतपचकोपन्यासइत्युच्यते । साख्यादिनिर्हि प्रधानात्साहकारिक तथा कालदिगात्मा दिक चान्यदपि वस्तुजातमन्युपेयते । लोकायतिकैस्तु नूतपचकव्यतिरिक्त नात्मादिक किं चिदन्युपगम्यते इत्यतस्तन्मताश्रयणेनैव सूत्रार्थो व्याख्यायतइति ॥ ७ ॥ यथा चैतत्त था दर्शयितुमाह । (एएपचमहब्भूयाइत्यादि) । एतान्यनतरोक्तानि पृथिव्यादीनि पंच महा नूतानि यानि तेन्य कायाकारपरिणतेन्य एक कश्चिच्चिद्रूपो नूताव्यतिरिक्त आत्मा नवति न नूतेन्यो व्यतिरिक्तोऽपर कश्चित्पर परिकल्पित परलोकानुयायी सुखडुखनो का जीवाख्य पदार्थोस्तीत्येवमाख्यातवतस्ते । तथाहि । एव प्रमाणयति । न पृथिव्यादि व्यतिरिक्त आत्माऽस्ति तद्ग्राहकप्रमाणानावात् ॥ प्रमाण चात्र प्रत्यक्षमेव नानुमानादिक । तत्रेंद्रियेण साक्षादर्थस्य सबधानावाद्व्यनिचारसनव । सति च व्यनिचारसनवे सदृशे च वाधासनवे तल्लक्षणमेव दूषितं स्यादिति सर्वत्रानाश्वास । तथाचोक्त । हस्तस्पर्शादि वांधेन, विषमे पथि धावता ॥ अनुमानप्रधानेन, विनिपातो न डुर्लन ॥ १ ॥ अनुमान चात्रोपलक्षणमागमादीनामपि । साक्षादर्थसबधानावाद्धस्तस्पर्शनेनैव प्रवृत्तिरिति । तस्मात्प्रत्यक्षमेवैक प्रमाण । तेन च नूतव्यतिरिक्तस्यात्मनो न ग्रहण । यत्तु चैतन्य ते षूपलन्यते तन्नूतेष्वेव कायाकारपरिणतेष्वनिव्यज्यते मद्यागेषु समुदितेषु मदशक्तिवदि ति । तथा न नूतव्यतिरिक्त चैतन्य तत्कार्यत्वाद्घटादिवदिति । तदेव नूतव्यतिरिक्तस्या त्मनोऽनावान्नूतानामेव चैतन्यानिव्यक्तिर्जलस्य बुद्बुदादिव्यक्तिवदिति । केषांचिल्लोकाय

हवे एनो उत्तर चार्वाक दर्शनीओ कहेछे थहएसिके० अथ एटले हवे एसि एटले महाभूत जे छे तेना विणासेण के० विनाश थकी, देहिणो के० जीवनो पण होइ के० विनाश होयछे परतु जे एवु कहेछे के आत्मा चवीने अन्यत्र स्थाने कर्मना वशथकी सुखी दुःखी थायछे, ते सर्वे मुग्धरजन जाणवु ॥ ८ ॥

॥ दीपिका–सांप्रतं नास्तिकमतमाश्रित्याह । ( सतीति ) सति पंचमहाभूतानि अस्मिन् लोके एकेषा भूतवादिनामाख्यातानि तत्वार्थकृतानि । तैर्वा कैराख्यातानि स्वयमगीकृतानि । परेषां च प्रतिपादितानि तानि चामूनि । ( दि )। पृथ्वी १ आपो जल २ तेजो वन्हि ३ वायु ४ आकाश पंचम येषां तानि ननु साख्यादिभिरपि भूतानि मन्यंतएव । तत्कथ चार्वाकमतापेक्षयैव भूतोपन्यास ति चेदुच्यते । साख्यादिभिर्हि प्रधानाहकारादिक तथा कालदिगात्मादिक वस्तुजातमगीक्रियते । चार्वाकैस्तु भूतव्यतिरिक्त नात्मादि किचिन्मन्यतइति येणैवायं सूत्रोपन्यास इति ॥७॥ चार्वाकमतांगीकारमेवाह । (एतइति) । एतानि ५ हाभूतानि तेभ्यो भूतेभ्य कायाकारपरिणतेभ्य एक कश्चिच्चिद्रूपो भूताव्यतिरिक्त आत्मा भवति नतु कश्चिदपर परलोकयायी जीवाख्य पदार्थोस्तीत्येवमाख्यातवतस्ते । ननु यदि भूतेभ्योन्य कश्चिदात्मा नास्ति कथ तर्हि मृतइति व्यपदेशइत्याशकायामाह । (अ हतेसिति) । अथ तेषा भूतानां विनाशेऽपगमे देहिनो देवदत्तादेर्विनाशो भवति ततश्च मृतइत्युच्यते न पुनर्जीवापगमइति । अत्रैतन्मतनिर्लोठनयुक्तयो वृत्तितोऽवसेया ॥८॥

॥ टीका–सांप्रतं विशेषेण सूत्रकार एव चार्वाकमतमाश्रित्याऽह । ( सतिपंचमहभू याइत्यादि) । सति विद्यते महांति च तानि भूतानि च महाभूतानि । सर्वलोकव्यापि त्वान्महत्वविशेषण । अनेन च भूताभाववादिनिराकरण द्रष्टव्य । इहास्मिन् लोके एके षा भूतवादिनामाख्यातानि प्रतिपादितानि तत्तीर्थकृता तैर्वा भूतवादिभिर्बार्हस्पत्यम तानुसारिभिराख्यातानि स्वयमगीकृतान्यन्येषा च प्रतिपादितानि । तानि चामूनि । तद्य था । पृथिवी कठिनरूपा । आपो द्रवलक्षणा । तेज उष्णरूपं । वायुश्चलनलक्षण । आकाश सुषिरलक्षणमिति तच्च पंचम येषां तानि । तथा । एतानि सांगोपांगानि प्रसि द्धत्वात् प्रत्यक्षप्रमाणावसेयत्वाच्च न कैश्चिदपह्नोतु शक्यानि । ननु च सांख्यादिभिरपि भूतान्यभ्युपगतान्येव । तथाहि । साख्यास्तावदेवमूचु । तद्यथा । सत्वरजस्तमोरूपात्प्र धानान्महान् बुद्धिरित्यर्थ । महतोऽहकारोऽहमितिप्रत्ययस्तस्मादप्यहकारात्षोडशकोग ण उत्पद्यते । सचायं । पंच स्पर्शादीनि बुद्धीद्रियाणि, वाक्पाणिपादपायूपस्थरूपाणि पंच कर्मेंद्रियाणि । एकादश मन । पचतन्मात्राणि । तद्यथा । गधरसरूपस्पर्शशब्दत

इत्यसौति )। इहेंद्रियाणि प्रत्येक भूतात्मकानि तान्येवापरस्य द्रष्टुरभावाद्द्रष्टृणि तेषां च प्रत्येक स्वविषयग्रहणादन्यविषये चाप्रऽवृत्तेर्नान्यदिंद्रियज्ञातमन्यदिंद्रियं जानातीत्यतो मया पंचापि विषया ज्ञाता इत्येवमात्मकः सकलनाप्रत्ययो न प्राप्नोत्यनुभूयते चायं तस्मादेकेनैव द्रष्टा भवितव्यम्। तस्यैव च चैतन्यं न भूतसमुदायस्येति। प्रयोगः पुनरेवं भूतसमुदाये चैतन्यं तदारंभेंद्रियाणां प्रत्येकविषयग्राहित्वे सति सकलनाप्रत्ययाभावात्। यदि पुनरन्यगृहीतमप्यन्यो गृह्णीयाद्देवदत्तगृहीतं यज्ञदत्तेनापि गृह्येत न चैतद् दृष्टमिष्टं चेति। ननु च स्वातंत्र्यपक्षेऽयं दोषः। यदा पुनः परस्परसापेक्षाणां संयोगपारतंत्र्याभ्युपगमेन भूतानामेव समुदितानां चैतन्याख्यो धर्मः संयोगवशादाविर्भवति। यथा किण्वोदकादिषु मद्यांगेषु सुमुदितेषु प्रत्येकमविद्यमानापि मदशक्तिरिति तदा कुतोऽस्य दोषस्यावकाशइति। अत्रोत्तरं। गाथाया चशब्दाक्षिप्तमभिधीयते। यत्तावदुक्तं। यथा भूतेभ्यः परस्परसव्यपेक्षसंयोगभाग्भ्यश्चैतन्यमुत्पद्यते। तत्र विकल्पयामः। किमसौ संयोगः संयोगिभ्यो भिन्नोऽभिन्नो वा। भिन्नश्चेत्षष्ठभूतप्रसंगो न चान्यत्पंचभूतव्यतिरिक्तसंयोगाख्यभूतग्राहकं भवतां प्रमाणमस्ति। प्रत्यक्षस्यैवैकस्याभ्युपगमात्तेन च तस्याग्रहणात् प्रमाणांतराभ्युपगमे च तेनैव जीवस्यापि ग्रहणमस्तु। तथाऽभिन्नो भूतेभ्यो भूतानामेव संयोगस्तत्राप्येतच्चिंतनीयं किंभूतानि प्रत्येकं चेतनावत्यचेतनावंति वा। यदि चेतनावंति तदा एकेंद्रियसिद्धिस्तदा समुदायस्य पंचप्रकारचैतन्यापत्तिः। अथाचेतनानि तत्रोक्तो दोषो नहि। यदत्र प्रत्येकमविद्यमानं तत्समुदाये न भवत्युपलभ्यते सिकतासु तैलवदित्यादिना। यदप्यत्र पूर्वोक्तं तथा मद्यांगेष्वविद्यमानाऽपि प्रत्येकं मदशक्तिः समुदाये प्रादुर्भवतीति। तदप्ययुक्तं। यतस्तत्र किण्वादिषु याच यावती शक्तिरुपलभ्यते। तथाहि॥ किण्वे बुभुक्षापनयनसामर्थ्यं भ्रमिजननसामर्थ्यं चोदकस्य तृडपनयनसामर्थ्यमित्यादिनेति भूतानां प्रत्येकं चैतन्याऽनभ्युपगमे दृष्टांतदार्ष्टांतिकयोरसाम्यं। किंच भूते चैतन्याभ्युपगमे मरणाभावो मृतकायेपि पृथ्व्यादीनां भूतानां सद्भावात्। नैतदस्ति। तत्र मृतकाये वायोस्तेजसो वाऽभावान्मरणसद्भाव इत्यशिक्षितस्योल्लापः। तथाहि। मृतकाये शोफोपलब्धेर्वायोरभावः कायस्य च पक्तिस्वभावस्य दर्शनाच्चाग्नेरिति। अथसूक्ष्मः कश्चिद्वायुविशेषोग्निर्वा ततोपगतइति मतिरित्येव च जीव एव नामांतरेणाभ्युपगतो भवति। यत्किंचिदेतत्। तथा न भूतसमुदायमात्रेण चैतन्याविर्भाव। पृथिव्यादिष्वेकत्र व्यवस्थापिते चैतन्यानुपलब्धेः। अथकायाकारपरिणतौ सत्यां तदाभिव्यक्तिरिष्यते। तदपि न। यतो लेप्यमयप्रतिमायां समस्तभूतसद्भावेऽपि जडत्वमेवोपलभ्यते। तदेवमन्वयव्यतिरेकाभ्यामालोच्यमानो नायचैतन्याख्यो गुणो भूतानां भवितुमर्हति। समुपलभ्यते चायं शरीरेषु। तस्मात् पारिशेषात् जीवस्यैवायमिति स्वदर्शनपक्षपातं विहायांगीक्रियतामिति।

तिकानामाकाशस्यापि नूतत्वेनाभ्युपगमाद्भूतपंचकोपन्यासो न दोषायेति । नूतव्यतिरिक्तोऽपरः कश्चिदा माख्यः पदार्थो न विद्यते कथं तर्हि मृतइति क्याह । अथैषां कायाकारपरिणतौ चैतन्याभिव्यक्तौ सत्यां तदूर्ध्वं तेषामन्यतमस्य ऽपगमे वायोस्तेजसश्चोनयोर्वा देहिनो देवदत्ताख्यस्य विनाशोऽपगमो नवति तइति व्यपदेशः प्रवर्तते न पुनर्जीवापगमइति नूताव्यतिरिक्तचैतन्यवादिपूर्वपक्षइति । प्रतिसमाधानार्थं निर्युक्तिरुदाह । "पंचएह संजोए,अएणगुणाणंच चेयणाइगुणो यंगाणाण,णअएणमुणिय मुणइ अणो ॥२१॥(पंचएहसंजोएइत्यादि)।पंचानां नूतानां संयोगे कायाकारपरिणामे चैतन्यादिकं । आदिशब्दात् नाषाचंक्रमणादिकश्च न नवतीति प्रतिज्ञा । अन्यादयस्त्वत्र हेतुत्वेनोपात्ता । दृष्टांतस्त्वन्यूह्य । ... पादानं । तत्रेदं चार्वाकः प्रष्टव्यः । यदेतद्भूतानां संयोगे चैतन्यमभिव्यज्यते तत्कि ... गेपि स्वातंत्र्यएवाहोस्वित्परस्परापेक्षया पारतंत्र्ये इति । किंचाऽतः ॥ न तावत्स्वातंत्र्ये आह । (अएणगुणाणंचेति) चैतन्यादन्ये गुणा येषां तान्यन्यगुणानि । तथा । गुणा पृथिवी इव्यगुणा आपः पक्तृगुणं तेजः । चलनगुणो वायुः अव... काशमिति । यदि वा प्रागभिहिता गंधादयः ... न्यादिति । तदेवं पृथिव्यादीन्यन्यगुणानि । च शब्दो ... तासु ... चैतन्यगुणे साध्ये पृथिव्यादीनामन्यगुणानां सतां चैतन्यगुणस्य पृथिव्य ... प्यनावान्नतत्समुदायाच्चैतन्याख्यो गुणः सिद्ध्यतीति । प्रयोगस्तत्र ... स्वातंत्र्ये सति धर्मित्वेनोपादीयते न तस्य चैतन्याख्यो गुणोस्तीति । साध्यो धर्मः पृथिव्यादीनामन्यगुणत्वात् । योयोन्यगुणानांसमुदायस्तत्रतत्राऽपूर्वगुणोत्पत्तिर्न नवतीति । यथा सिकतासमुदाये स्निग्धगुणस्य तैलस्य नोत्पत्तिरिति घटपटसमुदाये वा स्तनाद्याविर्नावइति । दृश्यते च कार्ये चैतन्यं तदात्मगुणो नविष्यतीति न नूतानामिति । अस्मिन्नेवसाध्ये हेत्वंतरमाह । (पंचिंदियगणाणंति) । पंच च तानि स्पर्शनरसनघ्राणचक्षुःश्रोत्राख्यानीन्द्रियाणि तेषां स्थानान्यवकाशास्तेषां चैतन्यगुणानावान्न नूतसमुदाये चैतन्यं । इदमत्र हृदयं । लोकायतिकानां हि अपरस्य इष्टुरनभ्युपगमादिन्द्रियाएयेव इष्टृणि । एतेषां च यानि स्थानान्युपादानकारणानि तेषामचिद्रूपत्वान्न नूतसमुदाये चैतन्यमिति । इन्द्रियाणां चामूनि स्थानानि । तद्यथा । श्रोत्रेंद्रियस्याकाशं सुषिरात्मकत्वात् । घ्राणेन्द्रियस्य पृथिवी तदात्मकत्वात् । चक्षुरिन्द्रियस्य तेजस्तद्रूपत्वात् । एवं रसनेंद्रियस्यापः । स्पर्शनेंद्रियस्य वायुरिति । प्रयोगश्चात्र नेंद्रियाएयुपलब्धिमंति तेषामचेतनगुणारब्धत्वात् । यद्यदचेतनगुणारब्धं तत्तदचेतनं । यथा घटपटादीनि । एवमपि च नूतसमुदाये चैतन्यानावएव साधितो नवति । पुनर्हेत्वंतरमाह । (ण अएणमुणियंमुण

पत्त्याप्यात्मास्तीत्यवसीयते । तथापि सत्यपि पृथिव्यादिभूतसमुदाये लेप्यकर्मादौ न सु खदु खेच्छाद्वेषप्रयत्नादिक्रियाणा सद्भाव इत्यत सामर्थ्यादवसीयते । अस्ति भूतातिरिक्त कश्चित्सुखदु खेच्छादीना क्रियाणा समवायिकारण पदार्थ सचात्मेति । तदेव प्रत्यक्षानुमा नादिपूर्विकाऽन्याप्यर्थापत्तिरभ्यूह्या । तस्यास्विद लक्षण । प्रमाणषट्कविज्ञातो, यत्रार्थो नान्यथा भवेत् ॥ अदृष्ट कल्पयेदन्य, सार्थापत्तिरुदाहृता ॥ १ ॥ तथाऽगमादप्यस्तित्वमवसे य । सचायमागम । अत्थिमेआयाउववाइएइत्यादि । यदि वा किमत्राऽपरप्रमाणचितया सकलप्रमाणज्येष्ठेन प्रत्यक्षेणैवात्मास्तीत्यवसीयते । तद्गुणस्य ज्ञानस्य प्रत्यक्षत्वात् । ज्ञान गुणस्य च गुणिनोऽनन्यत्वात् । प्रत्यक्षएवात्मा रूपादिगुणप्रत्यक्षत्वेन पटादिप्रत्यक्षवत् । तथा ह्यह सुख्यहदु रूयेवमाद्यहप्रत्ययग्राह्यऽस्त्यात्माप्रत्यक्ष । अहप्रत्ययस्य स्वसविद्रूपत्वा दिति । ममेद शरीर पुराण कर्मेति च शरीराभेदेन निर्दिश्यमानत्वादित्यादीन्यन्यान्यपि प्रमाणानि जीवसिद्धावभ्यूह्यानीति ॥ तथा यदुक्त । न भूतव्यतिरिक्त चैतन्यं तत्कार्यत्वा त् घटादिवदित्येतदप्यसमीचीन । हेतोरसिद्धत्वात् । तथाहि । न भूताना कार्य चैतन्यं तेषामतद्गुणत्वात् भूतकार्यचैतन्ये सकलनाप्रत्ययासभवाच्चेत्यादिनोक्तप्रायमतोऽस्त्यात्मा भूतव्यतिरिक्तो ज्ञानाधारइत्युक्त । ननुच किं ज्ञानाधारभूतेनात्मना ज्ञानाभिन्नेनाश्रितेन यावता ज्ञानादेव सर्वसकलनाप्रत्ययादिक सेत्स्यति किमात्मनातर्गडुकल्पेनेति । तथाहि । ज्ञानस्यैव चिद्रूपत्वाद्भूतरचेतने कायाकारपरिणते सह सबधे सति सुखदु खेच्छाद्वेषप्रय त्नक्रिया प्रादुष्पति तथा सकलनाप्रत्ययो भवान्तरगमनचेति । तदेव व्यवस्थिते किमात्मना कल्पितेनेत्यत्रोच्यते । नत्वात्मानमेकमाधारभूतमतरेण सकलनात्र न्याय्या घटते । तथा हि । प्रत्येकमिन्द्रियं स्वविषयग्रहणे सति परविषये चाप्रवृत्तेरेकस्य च परिच्छेत्तुरभावात् । मया पचापि विषया परिच्छिन्ना इत्यात्मकस्य सकलनाप्रत्ययस्याभावादिति । आलय विज्ञानमेकमस्तीति चेदेव सत्यात्मनएव नामातर भवता कृत स्यात् । नच ज्ञानाख्यो गुणो गुणिनमतरेण भवतीत्यवश्यमात्मना गुणिना भाव्यमिति । सच न सर्वव्यापी तद्गुणस्य सर्वत्रानुपलभ्यमानत्वात् घटवत् । नापि श्यामाकतंडुलमात्रोगुष्ठपर्वमात्रो वा । तावन्मात्रस्योपात्तशरीराव्यापित्वात् त्वक्पर्यंतशरीरव्यापित्वात् त्वचोपलभ्यमानगुणत्वा त् । तस्मात्स्थितमिदमुपात्तशरीरत्वक्पर्यंतव्याप्यात्मेति । तस्य चानादिकर्मसबद्धस्य क दाचिदपि सासारिकस्यात्मन स्वरूपेऽनवस्थानात् सत्यप्यमूर्तत्वे मूर्तेन कर्मणा सबधो न विरुध्यते । कर्मसबधाच्च सूक्ष्मबादरैकेंद्रियद्वित्रिचतु पचेंद्रियपर्याप्तापर्याप्तसाद्यवस्था बहु विधा प्रादुर्भवति । तस्य चैकातेन क्षणिकत्वे ध्यानाध्ययनश्रमप्रत्यभिज्ञानाद्यभाव । ए कातनित्यत्वे च नारकतिर्यङ्मनुष्यामरगतिपरिणामाभाव स्यात्तस्मात्स्यादनित्य स्या न्नित्यश्चात्मेत्यलमतिप्रसगेन ॥ ८ ॥

यच्चोक्तं प्राक् न पृथिव्यादिव्यतिरिक्त आत्माऽस्ति तद्ग्राहकप्रमाणाभावात् ।
त्र प्रत्यक्षमेवैकमित्यादि तत्र प्रतिविधीयते । यत्तावदुक्त प्रत्यक्षमेवैक प्रमाण
कमित्येतदनुपासितगुरोर्वच । तथाहि । अर्थाविसवादक प्रमाणमित्युच्यते
प्रामाण्यमेव व्यवस्थाप्यते । कश्चित्प्रत्यक्षव्यक्तीर्धर्मित्वेनोपादाय प्रमाणयति ।
मेता अर्थाऽविसवादकत्वादनुभूतप्रत्यक्षव्यक्तिवत् । नच ताभिरेव
स्वसंविदितानि परव्यवहारयितुमयमीशस्तासा स्वसन्निविष्टत्वान्मूकत्वाच्च ।
स्य नानुमान प्रमाणमित्यनुमानेनैवानुमाननिरास कुर्वंश्चार्वाक कथ नोन्मत्त
देव ह्यसौ तदप्रामाण्य प्रतिपादयेत् । यथा नानुमान प्रमाण
मानव्यक्तिवदित्येतच्चानुमानमथपरप्रसिध्येतदुच्यते । तदप्ययुक्त ।
नुमान भवत प्रमाणमप्रमाण वा । प्रमाण चेत्कथमनुमानमप्रमाणमित्युच्यते ।
माण कथमप्रमाणेन सता तेन पर प्रत्याय्यते । परेण तस्य
चेत्तदप्यसाप्रतं । यदिनाम परो मौढ्यादप्रमाणमेव प्रमाणमित्यवध्यस्यति । किं
तिनिपुणेनापि तेनैवाऽसौ प्रतिपाद्यते । यो ह्यन्यो गुडमेव विषमपि मन्यते किं तस्य
रयितुकामेनापि बुद्धिमता गुडएव दीयते । तदेव प्रत्यक्षानुमानयो
व्यवस्थापयतो भवतोऽनिच्छतोपि बलादायातमनुमानस्य प्रामाण्य । तथा
वतादे प्रतिषेध कुर्वन् भवान् केन प्रमाणेन करोति न तावत्प्रत्यक्षेण प्रतिषेध कर्तुं पार्यते
यतस्तत्प्रत्यक्ष प्रवर्तमान वा तन्निषेध विदध्यान्निवर्तमान वा । न तावत्प्रवर्तमान
ऽभावविषयत्वविरोधात् । नापि निवर्तमान । यतस्तच्च नास्ति तेन च
गतं । तथाहि । व्यापकविनिवृत्तौ व्याप्यस्यापि निवृत्तिरिष्यते ॥ न चार्वाकदर्शितप्रत्यक्षे
ण समस्तवस्तुव्याप्ति सभाव्यते । तत्कथ प्रत्यक्षविनिवृत्तौ पदार्थव्यावृत्तिरिति । तदेव स्व
र्गादे प्रतिषेध कुर्वता चार्वाकेणाऽवश्यं प्रमाणातरमभ्युपगतं । तथाऽन्याभिप्रायवि
ज्ञानाभ्युपगमादत्र स्पष्टमेव प्रमाणातरमभ्युपगतं । अन्यथा कथ परावबोधाय शा
स्त्रप्रणयनमकारि चार्वाकेणेत्यलमतिप्रसगेन । तदेव प्रत्यक्षादन्यमपि प्रमाणमस्ति
तेनात्मा सेत्स्यति किंपुनस्तदिति चेदुच्यते । अस्त्यात्मा । असाधारणतद्गुणोपल
ब्धेश्चक्षुरिंद्रियवत् । चक्षुरिंद्रियं हि न साक्षादुपलभ्यते । स्पर्शनादींद्रियाऽसाधारणरूप
विज्ञानोत्पादनशक्त्या त्वनुमीयते । तथात्मापि पृथिव्याद्यसाधारणगुणोपलब्धेरस्तीत्य
नुमीयते । चैतन्य च तस्यासाधारणगुणइत्येतत्पृथिव्यादिभूतसमुदाये चैतन्यस्य निराक
तत्वादवसेयं । तथास्त्यात्मा समस्तेंद्रियोपलब्धार्थसकलनाप्रत्ययसद्भावात् । पंचगवाक्षा
न्यनन्योपलब्धार्थसकलनाविधाय्येकदेवदत्तवत् । तथाऽत्माऽर्थद्रष्टा नेंद्रियाणि । तद्विग
मे हि तदुपलब्धार्थस्मरणात् । गवाक्षोपरमेऽपि तद्वारोपलब्धार्थस्मर्तृदेवदत्तवत् । तथार्था

नवति ॥ए॥ अस्योत्तरमाह् । ( एवमिति ) एवमात्माद्वैतवादमाश्रिता एके जल्पंति । मंदा जडा । मंदत्व चैतेषां युक्तिविकलजीवाऽद्वैतपक्षाश्रयणात् । तथाहि । यद्येकएवात्मा स्या त्तदा एके कृषीवलादय आरंभे जीवहिंसात्मके निश्रिता आसक्ताः स्वयपापं कृत्वा तीव्रं नारकादिडुःखं ( निगछइत्ति ) आर्षत्वाद्बहुवचनार्थे एकवचनं । निश्चयेन गछंति । तएवारं नसक्तानान्ये इत्येतन्न स्यात् । यद्येक एवात्मा स्यात्तदा एकेनाप्यशुभे कर्मणि कृते सर्वेषां डुःखं स्यान्नचैव दृश्यते । तस्मादेकएवात्मेति न युक्तं ॥ १० ॥

॥ टीका ॥ सांप्रतमेकात्माऽद्वैतवादमुद्देशार्थाधिकारप्रदर्शितं पूर्वपक्षयितुमाह् ।( ज हापुढवीत्यादि ) दृष्टांतबलेनैवार्थस्वरूपावगतेः पूर्वंदृष्टांतोपन्यासः । यथेत्युपदर्शने । च शब्दोऽपिशब्दार्थे । सचभिन्नक्रमएकेइत्यस्यानंतरं डष्टव्यः । पृथिव्येव स्तूपः पृथिव्या वा स्तूपः पृथिवीसंघातावयवी । सचैकोपि यथा नानारूपः सरित्समुड्पर्वतनगरसंनिवेशा द्याधारतया विचित्रो दृश्यते निम्नोन्नतमृडुकठिनरक्तपीतादिभेदेन वा दृश्यते । नच तस्य पृथिवीतत्त्वस्यैतावताभेदेन भेदो भवत्येवमुक्तरीत्या । भोइत्यादिपरामंत्रणं । कृ त्स्नोपि लोकश्चेतनाचेतनरूप एकोविद्वान् वर्तते । इदमत्र हृदयं । एकएव ह्यात्मा वि द्वान् ज्ञानपिंडः पृथिव्याद्याकारतया नाना दृश्यते नच तस्यात्मनएतावताऽत्मतत्त्व भेदो भवति । तथा चोक्तं । एकएव हि भूतात्मा, भूते भूते व्यवस्थितः ॥ एकधा बहु धा चैव दृश्यते जलचंड्वत् ॥ १ ॥ तथा पुरुषएवेदं सर्वं यद्भूतं यच्च भव्यं ॥ उतामृतत्व स्येशानो यदन्नेनातिरोहति, यदेजति यन्नेजति यद्दूरे यदंतरस्य सर्वस्य यत्सर्वस्यास्य वा ह्यत इत्यात्माद्वैतवादः ॥ए॥ अस्योत्तरदानायाह् । ( एवमेगे इत्यादि ) एवमित्यनंतरोक्ता त्माद्वैतवादोपदर्शनं । एके केचन पुरुषकारणवादिनो जल्पंति प्रतिपादयंति । किंभूतास्ते ऽ त्याह । मंदा जडाः सम्यक्परिज्ञानविकलाः ॥ मंदत्वं चैषां युक्तिविकलात्माऽद्वैतपक्षसमाश्रय णात् । तथाहि । यद्येकएवात्मा स्यान्नात्मबहुत्वं ततो ये सत्वाः प्राणिनः कृषीवलादय एके केच न आरंभे प्राण्युपमर्दकारिणि व्यापारे निश्रिता आसक्ताः सबद्धा अध्युपपन्नास्ते च भरंभ समारंभे कृत्वोपादाय स्वयमात्मना पापमशुभप्रकृतिरूपमसातोदयफलं तीव्रं डुःखं तदनुभ वस्थानं वा नरकादिकं नियछतीति । आर्षत्वाद्बहुवचनार्थे एकवचनमकारि । ततश्चायमर्थो निश्चयेन यछत्यवश्यतया गछंति प्राप्नुवंति तएवारंभासक्ता नान्यइत्येतन्न स्यादपित्वे केनापि अशुभे कर्मणि कृते सर्वेषां शुभानुष्ठायिनामपि तीव्रडुःखानिसंबंधः स्यादेकत्वा दात्मनइति । नचैतदेवं दृश्यते । तथाहि । यएव कश्चिदसमंजसकारी सएव लोके तदनुरू पाविडंबना समनुभवन्नुपलभ्यते नान्यइति । तथा सर्वगतत्वे आत्मनो बंधमोक्षाद्यभाव स्तथा प्रतिपाद्यप्रतिपादकविवेकाभावाछास्त्रप्रणयनाभावश्च स्यादिति । एतदर्थसंवादित्वा च्चाकान्येव निर्युक्तिकृन्नाथात्र व्याख्यायते । तद्यथा । पंचानां पृथिव्यादीनां भूतानामेकत्र

जहा य पुढवीथूने, एगे नाणाहि दीसइ ॥ एवं नो कसिणे लोए
विन्नू नाणाहि दीसइ ॥ ए ॥ एवमेगेत्ति जप्पंति, मंदा आरंनणि
स्सिआ ॥ एगे किच्चा सयं पावं, तिव्वं डुक्कं नियच्छइ ॥ १० ॥

अर्थ–एम पचनूतियागता एटले पच नूतिक वादिनो मत कह्यु हवे वादिनो मत दृष्टातेकरी कहिये ठेये जहाय के० जेम पुढवीथूनेएगे के० पृथ्वीरूप एक ठता नाणाहिदीसइ के०नदी, समुड, पर्वत, नगर अने ग्राम इत्यादि रुप नाना प्रकारे देखायठे परतु विचाले पृथ्वीनु अतर काइ देखातु नथी एटले पृथ्वी एकज ठे एवके० ए उक्त न्याये, नो ए वचन परने बोलाववाने अर्थेठे एटले अहो ? दर्शनीउं तेम लोएके० ए समस्त लोक चराचर स्वरूप एकज ठे एटले आत्मारूप ठे, परतु विन्नू विद्वान् ते चराचररूप आत्मा नाणाइ दीसइ के० नानाप्रकारे द्विपद चतुष्पद दादिरूप देखाय ठे परतु जे एम कहे के, शरीर शरीरने विषे आत्मा जुदो जुदो ठे ते ख्या ठे यडुक्त। एकएवहि नूतात्मा, नूते नूते व्यवस्थित ॥ एकधा बहुधा चैव, जलचंद्रवत् ॥ १ ॥ इत्यादि ॥ ए ॥ हवे जैन एने उत्तर आपेठे एव के० ए न्याये एगेत्ति के० एक एटले कोइ एक परवादी, पोताना ठदने बलात्कारे एम जप्पंति के०बोले ठे ते केवाठे, तोके मंदा के०मद ठे एटले सम्यक् ज्ञान विकल ठे, केमके, जो सर्वत्र आत्मा एकज ठे बीजो नथी तो जगत्माहे एगेके० एकेक जीव करसणी प्रमुख आरंनणिस्सिआ के० जीवहिंसात्मक आरंननेविषे निस्सिया एटले आसक्त थका सयंके० पोते पाव के० पापने किच्चा के० करीने तिव्वडुक्क के० तीव्र डुःखने नियच्छइ के० पामेठे पण अनेरा नथी पामता, तथा जे जीव जगत्मा काइ असमजस चौरादिक कर्म करे ठे, ते ठेदनन्नेदनादिक अनेक विटबनाउं पामेठे अने जे नलो समाचरेठे ते साता पामेठे माटे जो सर्वजीवनो आत्मा एकज होय तो सर्व जीवने विटबना अथवा साता केम न थवी जोइये ? माटे ए तमारु वचन मिथ्या ठे, केमके सर्व जीव पोतपोतानी करणीए सुख डुःखने पामेठे ॥ १० ॥ ए सव्वगतवादिगता एटले सर्वगत वादीनु मत कह्यु

---

॥ दीपिका– अथ एकात्माऽद्वैतवादमुद्दिश्याह । ( जधायेति ) यथा च शब्दोऽपिशब्दार्थे। सच निन्न । पृथिव्या स्तूप पृथिव्येव वा स्तूप पृथिवीसघाताख्योऽवयवी। सच एकोपि यथा नानारूप सरित्समुड्पर्वतनगरग्रामाद्याधारतया विचित्रो दृश्यते। निम्नोन्नतमृडुकठिनरक्तपीतादिन्नेदेन वा दृश्यते । नच तावता पृथिवीत्वस्यैकस्य नेदो नवति। एव नोइति परामत्रण । कृत्स्नोपि चेतनाचेतनरूपो लोक एको विद्वानेक एवात्मा विद्वान् ज्ञानपिंड पृथिव्यादिनूताकारतया नाना दृश्यते। नच तावता तस्यैकस्यात्मतत्त्वस्य नेदो

नवति ॥ए॥ अस्योत्तरमाह । (एवमिति) एवमात्माद्वैतवादमाश्रिता एके जल्पति । मंदा जडा । मंदत्व चैतेषा युक्तिविकलजीवाऽद्वैतपक्षाश्रयणात् । तथाहि। यद्येकएवात्मा स्या त्तदा एके कृषीवलादय आरंभे जीवहिंसात्मके नि श्रिता आसक्ता स्वयपाप कृत्वा तीव्र नारकादिडु ख (निगह्नइत्ति) आर्षत्वाद्बहुवचनार्थे एकवचन। निश्चयेन गछति । तएवार नसक्तानान्ये इत्येतन्न स्यात्। यद्येक एवात्मा स्यात्तदा एकेनाप्यशुभे कर्मणि कृते सर्वेषा डु ख स्यान्नचैव दृश्यते । तस्मादेकएवात्मेति न युक्त ॥ १० ॥

---

॥ टीका ॥ साप्रतमेकात्माऽद्वैतवादमुद्देशार्थाधिकारप्रदर्शित पूर्वपक्षयितुमाह ।(ज हापुढवीत्यादि) दृष्टातबलेनैवार्थस्वरूपावगते पूर्वदृष्टातोपन्यास । यथेत्युपदर्शने । च शब्दोऽपिशब्दार्थे । सचभिन्नक्रमएकेऽस्यस्यानतर इष्टव्य । पृथिव्येव स्तूपा पृथिव्या वा स्तूप पृथिवीसघातावयवी। सचैकोपि यथा नानारूप सरित्समुद्रपर्वतनगरसन्निवेशा याधारतया विचित्रो दृश्यते निम्नोन्नतमृडुकठिनरक्तपीतादिभेदेन वा दृश्यते । नच तस्य पृथिवीतत्त्वस्यैतावताभेदेन भेदो भवत्येवमुक्तरीत्या । भोइत्यादिपरामत्रण। कृ त्स्नोपि लोकश्चेतनाचेतनरूप एकोविद्वान् वर्तते । इदमत्र हृदय । एकएव ह्यात्मा वि द्वान् ज्ञानपिंड पृथिव्याद्याकारतया नाना दृश्यते नच तस्यात्मनएतावताऽत्मतत्त्व भेदो भवति । तथा चोक्त । एकएव हि भूतात्मा, भूते भूते व्यवस्थित ॥ एकधा बहु धा चैव दृश्यते जलचद्रवत् ॥ १ ॥ तथा पुरुषएवेद सर्व यद्भूत यच्च भव्य॥ उतामृतत्व स्येशानो यदन्नेनातिरोहति, यदेजति यन्नेजति यद्दूरे यदतरस्य सर्वस्य यत्सर्वस्यास्य वा ह्यत इत्यात्माद्वैतवाद ॥ए॥ अस्योत्तरदानायाह। (एवमेगे इत्यादि) एवमित्यनतरोक्ता त्माद्वैतवादोपदर्शन।एके केचन पुरुषकारणवादिनो जल्पति प्रतिपादयति ।किंभूतास्ते इ त्याह।मदा जडा सम्यक्परिज्ञानविकला ॥मदत्व चैषा युक्तिविकलात्माऽद्वैतपक्षसमाश्रय णात्। तथाहि।यद्येकएवात्मा स्यान्नात्मबहुत्व ततो ये सत्वा प्राणिन कृषीवलादय एके केच न आरंभे प्राण्युपमर्दकारिणि व्यापारे नि श्रिता आसक्ता सबद्धा अध्युपपन्नास्ते च भरभ समारंभे कृत्वोपादाय स्वयमात्मना पापमशुभप्रकृतिरूपमसातोदयफल तीव्र डु ख तदनुभ वस्थान वा नरकादिक नियछतीति। आर्षत्वाद्बहुवचनार्थे एकवचनमकारि। तत्रायमर्थो निश्चयेन यछत्यवश्यतया गच्छति प्राप्नुवति तएवारंभासक्ता नान्यइत्येतन्न स्यादपित्वे केनापि अशुभे कर्मणि कृते सर्वेषा शुभानुष्ठायिनामपि तीव्रडु खानिसबध स्यादेकत्वा दात्मनइति । नचैतदेव दृश्यते।तथाहि।यएव कश्चिदसमजसकारी सएव लोके तदनुरू पाविडबना समनुभवन्नुपलभ्यते नान्यइति । तथा सर्वगतत्वे आत्मनो बधमोक्षायभाव स्तथा प्रतिपाद्यप्रतिपादकविवेकाभावाच्छास्त्रप्रणयनाभावश्च स्यादिति । एतदर्थसवादित्वा च्छ्लाक्यन्येव निर्युक्तिकृतायात्र व्याख्यायते । तद्यथा । पचाना पृथिव्यादीनां भूतानामेकत्र

